अन्यच्च-

इदमनन्तभवभ्रमसूचकं, मलवशादनुसुन्दरचेष्टितम् ।
यदिह जातमतः परिकीर्तितं, मतिविकाशनकारि सुदेहिनाम् ॥९९२॥
न च नियोगत एव भवेदियं, गदितपद्धतिरत्र नरे नरे ।
सकृदवाप्य जिनेन्द्रमतं यतः, शिवमितः प्रगता बहवो नराः ॥९९३॥
त्रिचतुरेषु भवेषु तथाऽपरे, बहुतमाः पुनरन्यविधानतः ।
विविधभव्यतया भवदारणं, निजनिजक्रमतो दधिरे नराः ॥९९४॥
तदिदमत्र सुगुह्यमहो जना !, हृदि विधत्त परं परमाक्षरम् ।
**मलविशोधनमेव सुमेधसा, लघु विधेयमिहाप्य जिनागमम् ॥९९५॥**
एतन्निःशेषमत्र प्रकटितमखिलैर्युक्तिगर्भैर्वचोभिः,
प्रस्तावे भावसारं तदखिलमधुना शुद्धबुद्ध्या विचिन्त्य ।
भो भव्या ! भाति चित्ते यदि हितमनघं चेदमुच्चैस्तरां वः,
तत्तूर्णं मेऽनुरोधाद्विदितफलमलं स्वार्थसिद्ध्यै कुरुध्वम् ॥९९६॥
उत्सूत्रमेव रचितं मतिमान्द्यभाजा, किञ्चिद्यदीदृशि मयाऽत्र कथानिबन्धे ।
संसारसागरमनेन तरीतुकामैस्तत्साधुभिः कृतकृपैर्मयि शोधनीयम् ॥९९७॥

**इत्युपमितिभवप्रपञ्चायां कथायां पूर्वसूचितमीलकवर्णनो नामाष्टमः प्रस्तावः समाप्तः ॥**

**॥ श्रीमत्सिद्धर्षिगणिवर्यविरचिता उपमितिभवप्रपञ्चा कथा समाप्ता ॥**



## ( ग्रन्थकार-प्रशस्तिः )

द्योतिताखिलभावार्थः, सद्भव्याब्जप्रबोधकः ।
सूराचार्योऽभवद्दीप्तः, साक्षादिव दिवाकरः ॥१॥
स निवृत्तिकुलोद्भूतो, लाटदेशविभूषणः ।
आचारपञ्चकोद्युक्तः, प्रसिद्धो जगतीतले ॥२॥
अभूद् भूतहितो धीरस्ततो देल्लमहत्तरः ।
ज्योतिर्निमित्तशास्त्रज्ञः, प्रसिद्धो देशविस्तरे ॥३॥
ततोऽभूदुल्लसत्कीर्तिर्ब्रह्मगोत्रविभूषणः ।
दुर्गस्वामी महाभागः, प्रख्यातः पृथिवीतले ॥४॥
प्रव्रज्यां गृह्णता येन, गृहं सद्धनपूरितम् ।
हित्वा सद्धर्ममाहात्म्यं, क्रिययैव प्रकाशितम् ॥५॥
यस्य तच्चरितं वीक्ष्य, शशाङ्ककरनिर्मलम् ।
बुद्धास्तत्प्रत्ययादेव, भूयांसो जन्तवस्तदा ॥६॥
सद्दीक्षादायकं तस्य, स्वस्य चाहं गुरूत्तमम् ।
नमस्यामि महाभागं, गर्गर्षिं मुनिपुङ्गवम् ॥७॥
क्लिष्टेऽपि दुष्षमाकाले, यः पूर्वमुनिचर्यया ।
विजहारेह निःसङ्गो, दुर्गस्वामी धरातले ॥८॥
सद्देशनांशुभिर्लोके, द्योतित्वा भास्करोपमः ।
श्रीभिल्लमाले यो धीरो, गतोऽस्तं सद्विधानतः ॥९॥
तस्मादतुलोपशमः सिद्ध(सद्द)र्षिरभूदनाविलमनस्कः ।
परहितनिरतैकमतिः सिद्धान्तनिधिर्महाभागः ॥१०॥
विषमभवगर्तनिपतितजन्तुशतालम्बदानदुर्ललितः ।
दलिताखिलदोषकुलोऽपि सततकरुणापरीतमनाः ॥११॥
यः सङ्ग्रहकरणरतः सदुपग्रहनिरतबुद्धिरनवरतम् ।
आत्मन्यतुलगुणगणैर्गणधरबुद्धिं विधापयति ॥१२॥
बहुविधमपि यस्य मनो निरीक्ष्य कुन्देन्दुविशदमद्यतनाः ।
मन्यन्ते विमलधियः सुसाधुगुणवर्णकं सत्यम् ॥१३॥
उपमितभवप्रपञ्चा कथेति तच्चरणरेणुकल्पेन ।
गीर्देवतया विहिताऽभिहिता सिद्धाभिधानेन ॥१४॥

हरिभद्रसूरिविहितोपकारस्मरणम् ।

अथवा-आचार्यो हरिभद्रो मे, धर्मबोधकरो गुरुः ।
प्रस्तावे भावतो हन्त, स एवाद्ये निवेदितः ॥१५॥
विषं विनिर्धूय कुवासनामयं व्यचीचरद्यः कृपया मदाशये ।
अचिन्त्यवीर्येण सुवासनासुधां, नमोऽस्तु तस्मै हरिभद्रसूरये ॥१६॥
अनागतं परिज्ञाय, चैत्यवन्दनसंश्रया ।
मदर्थैव कृता येन, वृत्तिर्ललितविस्तरा ॥१७॥
यत्रातुलरथयात्राधिकमिदमिति लब्धवरजयपताकम् ।
निखिलसुरभवनमध्ये सततप्रमदं जिनेन्द्रगृहम् ॥१८॥
यत्रार्थष्टङ्कशालायां, धर्मः सद्देवधामसु ।
कामो लीलावतीलोके, सदाऽऽस्ते त्रिगुणो मुदा ॥१९॥
तत्रेयं तेन कथा कविना निःशेषगुणगणाधारे ।
श्रीभिल्लमालनगरे गदिताऽग्रिममण्डपस्थेन ॥२०॥
प्रथमादर्शे लिखिता साध्व्या श्रुतदेवतानुकारिण्या ।
दुर्गस्वामिगुरूणां शिष्यिकयेयं गुणाभिधया ॥२१॥
संवत्सरशतनवके द्विषष्टिसहिते(९६२)ऽतिलङ्घिते चास्याः ।
ज्येष्ठे सितपञ्चम्यां पुनर्वसौ गुरुदिने समाप्तिरभूत् ॥२२॥
ग्रन्थाग्रमस्या विज्ञाय, कीर्तयन्ति मनीषिणः ।
अनुष्टुभां सहस्राणि, प्रायशः सन्ति षोडश ॥२३॥

॥ उपमितिभवप्रपञ्चाकथाकारप्रशस्तिः समाप्ताः ॥



## परिशिष्टम् ।

षष्ठे प्रस्तावे पृष्ठ १६ मिते हरिकुमारेण दत्तोत्तराः सन्ति षट् प्रश्नाः पद्मकेसरादिमित्रवृन्दप्रयुक्ताः । तेषु चरमत्रितयं तु तत्रैव स्पष्टार्थम्, आद्यत्रितयोत्तराणामस्फुटत्वात् तत्स्पष्टीकरणार्थमयं प्रयासः ।

आद्ये पद्मकेसरप्रश्ने प्रश्नत्रयं-

(१) कस्य वाचमाकर्णयन्नपि पश्यन् विस्फारिताक्षोऽपि तृप्तिं नो याति ? (२) को तृप्तिं नो याति ? (३)किं च संसारकारणम् ?

अत्र हरिकुमारस्य 'ममत्वम्' इति समाधानम्, तच्चैवं विभजनीयं-प्रथम-स्योत्तरः 'मम' इति शब्दांशेन, द्वितीयस्य 'त्वमि'ति, तृतीयस्य च 'ममत्वम्' इति शब्देन ।

द्वितीये पद्मकेसरस्यैव प्रश्ने श्लोकपूर्वार्धेन प्रथमप्रश्नः (१) 'कस्या बिभ्यद्भीरुर्न भवति सङ्ग्रामलम्पटमनस्कः' ? अत्र 'दलनायाः' इति समाधानम्-तत्र द-लयोः साम्यमितिकृत्वा 'ललनायाः' स्त्रीया इत्यर्थोऽवगन्तव्यस्तद्वियोगे तस्या रोषस्य भयकारणत्वात् ।

श्लोकोत्तरार्द्धेन द्वितीय प्रश्नः (२) 'वाताऽऽकम्पितवृक्षा निदाघकाले च कीदृक्षाः' ? इति । अत्रापि तदेवोत्तरम्, दलनं चात्र पत्रक्षरणं-तस्यायो लाभः येषां ते दलनायाः इति बहुव्रीहिसमासः । ग्रीष्मकाले प्रचण्डवातप्रेरितं पत्रक्षरणं जायते इति सङ्गतमुत्तरम् ।

तृतीये विलासस्य प्रश्ने बहवोऽवान्तरप्रश्नाः (१) कीदृग् राजकुलं विषीदति ? (२) के पावके नश्यन्ति ? (३) किं काननं बोध्यम् ? (४) (के) च बहवः कालेऽलमच्युता भविष्यन्ति ? (५) कीदृक्षाश्च जिनेश्वराः ? (६) कस्यै गन्धो रोचते ? (७) कीदृशि मानवे जिनवरे भक्तिर्न सम्पद्यते ? इति सप्त प्रश्नाः । 'अकुशलभावनाभावितमानसे' इति हरिकुमारोत्तरम् । तत्र क्रमशः 'अकुशल(म्)' इति आद्यप्रश्नोत्तरम्, एवं द्वितीयस्य 'शलभाः', तृतीयस्य 'वनं', चतुर्थस्य 'कुशलभावनाभाविता' इति, पञ्चमस्य 'अभावितमाना' इति त्यक्तमाना इत्यर्थः, षष्ठस्य 'नसे'-नासिकायै, सप्तमस्य च 'अकुशलभावनाभावितमानसे' इति समस्तमुत्तरम् इति दिक् ।

